# मुत्तुस्वामि दीक्षितर् विरचित अभयाम्बा विभक्ति कीर्तनानि

(typeset using LaTeX $2_\varepsilon$ , pdfLaTeX, and dvng Type I fonts)

## 0. sadāśrayē

# अभयाम्बा विभक्ति कीर्तनानि

(ध्यान कृति)

## सदाश्रये

रागम्: चामरम् (५६) ताळम्: रूपकम्

### पल्लवि

सदाश्रये अभयाम्बिके सन्निधेहि
सदाश्रये त्वामम्बिके भद्रं देहि

### अनुपल्लवि

चिदाश्रये चिदम्बरचन्द्रिके एहि

चिदाश्रये शिवमञ्चके नतवाराहि

मुदाश्रये भुक्तिमुक्तिप्रदमार्गं ब्रूहि
मुदाश्रये मायाधीनं दीनं मां पाहि

चरणम्

गौरि मायूरनाथमोहनकरशक्ते

शौरीशविधीन्द्रादिसन्नुतपराशक्ते

नारीमण्याद्यर्चितनादबिन्दुयुक्ते

शारीरकादिविद्यासिद्धान्तयुक्ते

भेरीमद्दळवीणावादनानुरक्ते

सूरिजनोपासितचरणनलिनयुक्ते

वाणीमाकरधृतचामरसेवासक्ते

दूरीकृतदुरितवेदशास्त्रादिप्रसक्ते

वारीशादिलोकपालनुतगुरुगुहभक्ते

दारिद्र्यदुःखभञ्जनकरशङ्कराविभक्ते

शुकसनकादिदेवतासेविते परदेवते
वारिजमुखि वरदाभयहस्ते नमो नमस्ते

✠ ✠ ✠ ✠ ✠

# 1. abhayāmbā jagadambā

# १. अभयाम्बा जगदम्बा

रागम्: कल्याणि (६५)  ताळम्: आदि

## पल्लवि

अभयाम्बा जगदम्बा रक्षतु
आत्मरूपप्रतिबिम्बा मदम्बा

## अनुपल्लवि

इभवदनश्रीगुरुगुहजननी ईशमायूरनाथरञ्जनी
अभयवरदपाणी अलिवेणी आश्रितमावाणी कल्यणी

## चरणम्

भक्तनागलिङ्गपरिपालिनी भासमाननवरत्नमालिनी

व्यक्तसमस्तजगद्विशालिनी व्यधिकरणहरणनिपुणशूलिनी

रक्तशुक्लमिश्रप्रकाशिनी रविकोटिकोटिसङ्काशिनी

भुक्तिमुक्तिमानसनिवासिनी भावरागतालविश्वासिनी

भक्तिफलप्रददक्षमृडानी भक्तिप्रदनिपुणतरभवानी
शक्तिसंप्रदायकशर्वाणी भुक्तिमुक्तिवितरणरुद्राणी

✠ ✠ ✠ ✠ ✠

## 2. āryām abhayāmbām

## २. आर्यां अभयाम्बाम्

रागम्: भैरवि (२०)    ताळम्: त्रिपुट

### पल्लवि

आर्यां अभयाम्बां भजरे रे चित्त सन्ततं

अविद्याकार्यकलनां त्यज रे
आदिमध्यान्तरहितां शिवसहिताम्

### अनुपल्लवि

सूर्याग्निचन्द्रमण्डलमध्यवासिनीं

सुखतरप्रवर्त्तिनीं स्वेतरनिवासिनीम्

आचार्यशिष्यानुग्रहकरणशक्तिप्रदापारकरुणां

चर्यादिचतुष्टयवितरणसमर्थतरचरणां अरुणाम्

चरणम्

नन्दनवनोत्पादनपुष्पमालिकां
वन्दनालयादिप्रस्थापनदिव्य-
चन्दनाकर्षणस्थलशुद्धिकरण-
वन्दनस्तोत्रादिपठनभक्तसेवानाम्
मन्दधीहरणचर्यायुतमानवानां धर्ममय-
स्वच्छन्दशिवसालोक्यदायकचतुरतरहरनटभैरवीं
मन्दस्मितविलसितमुखारविन्दां गुरुगुहाम्बिकां
मुकुन्दसोदरीं महात्रिपुरसुन्दरीमानन्दलहरीम्

✠ ✠ ✠ ✠ ✠

## 3. girijayā ajayā

# ३. गिरिजया अजया

रागम्: शङ्कराभरणम् (२९)  ताळम्: आदि

### पल्लवि

गिरिजयाऽजया अभयाम्बिकया
गिरीशजायया रक्षितोऽहम्

### अनुपल्लवि

हरिहयादिदेवताराधितया आत्मस्वरूपप्रबोधितया
हरिहरगुरुगुहसम्मोदितया आदिक्षान्तवर्णवेदितया

### चरणम्

समयविशेषनिर्याणमुखबीजनिर्बीजदीक्षाविषयकरण

समयाचरणोपयोगपूजासामग्रीसंग्रहान्तःकरण-

समयमतप्रतिपाद्यानुसरणसामान्यविशेषप्रजाचरण-

ममत्वनिराकरणक्रियायुतसद्भक्तानां धर्मार्थरूप-
समत्ववृत्तिवितरणनिपुणतरसाम्राज्यप्रदारुणचरणया

✠ ✠ ✠ ✠ ✠

## 4. abhayāmbikāyai

## ४. अभयाम्बिकायै

रागम्: यदुकुलकाम्भोजि (२८) ताळम्: रूपकम्

### पल्लवि

अभयाम्बिकायै अश्वारूढायै
अभयवरप्रदायै नमस्ते नमस्ते

### अनुपल्लवि

सुभगाकारायै सुरुचिरनटनभेदायै

शोभितरदनायै शुद्धमानसायै
हिरण्यमणिकुण्डलायै हिमाचलसदनायै

### चरणम्

सकलमन्त्रतन्त्ररूपायै सकलायै

चन्द्रशेखरप्रियायै पञ्चमकारायै

गूढगुल्फायै गुरुगुहस्वरूपायै

गर्वभण्डखण्डायै गमपदादिनुतपदायै
कावेरीतीरायै कमलेशसेवितायै

✠ ✠ ✠ ✠ ✠

## 5. abhayāmbikāyāḥ

## ५. अभयाम्बिकायाः

रागम्: केदारगौळ (२८)   ताळम्: झंप

### पल्लवि

अभयाम्बिकायाः अन्यं न जाने
अज्ञानध्माने अपरोक्षज्ञाने

### अनुपल्लवि

इभराजगत्याः ईश्वर्याः जगत्याः
नभोमणिगत्याः नादलयगत्याः

### चरणम्

बालादिनामधेयप्रकाशिन्याः

कालादितत्वान्तप्रकाशिन्याः

मूलादिद्वादशान्तप्रकाशिन्याः

स्थूलादिमौनान्तप्रकाशिन्याः

त्रैलोक्यमूलप्रकृत्याःस्वशक्त्याः

सालोकसामीप्यसारूप्यमुक्त्याः

मालिनीमन्त्रमालादितन्त्रोक्त्याः
शूलिनिगुरुगुहस्वानुभवगत्याः

✠ ✠ ✠ ✠ ✠

# 6. ambikāyāḥ

## ६. अम्बिकायाः अभयाम्बिकायाः

रागम्: केदारम् (२९)   ताळम्: आदि

### पल्लवि

अम्बिकायाः अभयाम्बिकायाः तव दासोऽहं
आदिजगदम्बिकायाः

### अनुपल्लवि

शम्बरारिहरिशशिकुबेरप्रमुखोपासितनवयोगिन्याः

सांख्यतारकमनस्कराजयोगिन्याः शिवभोगिन्याः

बिम्बप्रतिबिम्बरूपिण्याः
बिन्दुमण्डलवासिन्याः स्वरूपिण्याः

## चरणम्

यमनियमाद्यष्टाङ्गयोगविषयादिनिग्रहकरण-

मूलाधारमणिपूरकाद्यब्जभेदनस्फुरकुण्डलिनी-

सहस्रदळब्रह्मरन्ध्रस्थकमलान्तर्गतशिवसम्मेळन-

गळितपरमामृतबिन्दुसेचनसमुज्जृम्भित-

नाडीमुखविकासकरणनिजानुभूतियोगिन्याः

अमोघवरशिवसारूप्यानन्दानुभवप्रदायिन्याः
अप्रमेयगुरुगुहादिजनन्याः ब्रह्मादिपञ्चककारिण्याः

✠ ✠ ✠ ✠ ✠

## 7. abhayāmbikāyām

## ७. अभयाम्बायाम्

रागम्: सहाना (२२)     ताळम्: त्रिपुट

### पल्लवि

अभयाम्बायां भक्तिं करोमि
सच्चिदानन्दरूपायां स्वस्वरूपायां श्री

### समष्टिचरणम्

विभवादिवितरणनिपुणमन्त्रिण्यां
विजयकारणनिपुणतरदण्डिन्याम्
वियदादिभूतकिरणमालिन्यां
विकल्पहरणनिपुणशूलिन्याम्

अभेदप्रतिपादितायां आदिगुरुगुहवेदितायां
सभेशमोदितनटनायां सायुज्यप्रदचरणायाम्

# 8. dākṣāyaṇi

# ८. दाक्षायणि

रागम्: तोडि (८) ताळम्: रूपकम्

## पल्लवि

दाक्षायणि अभयाम्बिके
वरदाभयहस्ते नमस्ते श्री

## अनुपल्लवि

दीक्षासन्तुष्टमानसे दीनावनहस्तसारसे

कांक्षितार्थप्रदायिनि कामतन्त्रविधायिनि
साक्षिरूपप्रकाशिनि समस्तजगद्विलासिनि

## चरणम्

सकलनिष्कळस्वरूपतेजसे

सकललोकसृष्टिकरणभ्राजसे

सकलभक्तसंरक्षणयशसे

सकलयोगिमनोरूपतत्वतपसे

प्रबलगुरुगुहोदये पञ्चाननहृदालये
भरतमतङ्गादिनुते भारतीशपूजिते

✠ ✠ ✠ ✠ ✠

## 9. śrī abhayāmbā

## ९. श्री अभयाम्बा

मङ्गळकृति (मणिप्रवाळम्)

रागम्: श्री (२२)     ताळम्: आदि

### पल्लवि

श्री अभयाम्बा निन्नु चिन्तिञ्चिन वारिकि
चिन्तै कवलै येल्लां तीरुमम्मा

### अनुपल्लवि

हे अभयकरे वरे ईश्वरि कृपतोनु
एन्दनै रक्षिक्क इदु नल्ल समयमम्मा

### चरणम्

नी अत्यद्भुतशुभगुणमुलु विनि

नीवे दिक्कनि नेर नम्मिति

नीरजाक्षि निजरूपसाक्षि
नित्यानन्दगुरुगुहकटाक्षि रक्षि

✠ ✠ ✠ ✠ ✠